श्रीविजयीन्द्रतीर्थश्रीमच्चरणैः प्रणीतः

# भेदविद्याविलासः




सम्पादकः

डा. शङ्करनारायण अडिगः






प्रकाशनम्

पूर्णप्रज्ञसंशोधनट्रस्ट्

पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठम्,

बेङ्गलूरु - ५६००२८

२०१८

श्रीविजयीन्द्रतीर्थश्रीमच्चरणैः प्रणीतः

# भेदविद्याविलासः

सम्पादकः

डा. शङ्करनारायण अडिगः

प्रकाशनम्

पूर्णप्रज्ञसंशोधनट्रस्ट्

पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठम्,

बेङ्गलूरु - ५६००२८

२०१८

श्रीविश्वेशतीर्थग्रन्थमाला - २०

# श्रीविजयीन्द्रतीर्थश्रीमच्चरणैः प्रणीतः

# भेदविद्याविलासः

ISBN No. : 978-93-81275-32-0

सम्पादकः - डा. शङ्करनारायण अडिगः

प्रकाशनम् - पूर्णप्रज्ञसंशोधनट्रस्ट्
पूर्णप्रज्ञसंशोधनमन्दिरम्, पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

पत्राणि : ३२ + ११२

प्रथममुद्रणम् : २०१८

मुद्रितपुस्तकसङ्ख्या : ५००

मूल्यम् : १२० रूप्यकाणि

मुद्रणम् : पवन प्रिंटर्स्, बेङ्गलूरु

# BHĒDAVIDYĀVILĀSAḤ

## of Śri Vijayīndratīrtha Swamiji

Edited by:

**Dr. Shankaranarayana Adiga**

Published by:

**Poornaprajna Samshodhana Trust**

Poornaprajna Samshodhana Mandiram,
Poornaprajna Vidyapeetha,
Bengaluru - 560028

**2018**

# अनुग्रहसन्देशः

पदवाक्यप्रमाणपारावारपारीणैः चतुरधिकशतग्रन्थप्रणयनेन प्रथित-विभवैः श्रीमद्विजयीन्द्रतीर्थश्रीमच्चरणैः प्रणीतं भेदविद्याविलासाख्य-प्रबन्धरत्नं विदुषां करकमलयोः समर्पयितुं मोमुद्यते नश्चेतः । न्यायामृतामोद-युक्तिरत्नाकर-चन्द्रिकोदाहृतन्यायमालादिप्रौढप्रबन्ध-प्रणयनेन विद्वज्जनाराधितकमनीयचरणाः श्रीमद्विजयीन्द्रतीर्थश्रीमच्चरणाः मोक्षोपयोगिजीवेशभेदज्ञानप्रसाधनं ग्रन्थमिमं विरचय्य महान्तमुपकारं व्यधुरित्यत्र न सन्देहगन्धः ।

अत्र चत्वारि प्रकरणानि विद्यन्ते । आदिमप्रकरणे तत्त्ववादिभिः समर्थ्यमानः पञ्चविधोऽपि भेदः न प्रत्यक्षप्रमाणसिद्ध इत्याशङ्कामनूद्य भेदस्य प्रत्यक्षप्रमाणसिद्धत्वं निपुणतरं प्रपञ्चितम् । प्रसङ्गसङ्गत्या मनस इन्द्रियत्वं प्रामाण्यं च पराकुर्वताम् अद्वैतवादिनां प्रक्रियाऽत्र विमृष्टा । तथाहि अद्वैतिनां वचनम्-

‘प्रमाणसहकारित्वाद् विषयस्याप्यभावतः ।
न प्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः ।।’ इति ।

श्रीमद्भागवतमहाभारतादिप्रमाणवचनोदाहरणपुरस्सरं मनस इन्द्रियत्वं प्रामाण्यं च विस्तरेणात्र समर्थितम् । अयमत्र सिद्धान्तसारः-

‘फलभेदाद् पुराणादाविन्द्रियव्यवहारतः ।
मन इन्द्रियमस्माकं राद्धान्ते नयनादिवत् ।।’ इति ।

द्वितीये प्रकरणे जीवेश्वरभेदनिराकरणपराण्यनुमानान्यनूद्य अनुमानेनापि भेदः समर्थितः । तृतीये प्रकरणे ‘तत्त्वमसि’, ‘अहं

ब्रह्मास्मि', 'द्वासुपर्णा', 'योऽन्यां देवतामुपास्ते' इत्यादिश्रुतयः कथञ्चिदपि नाद्वैते तात्पर्यवत्यः, अपितु भेदपरा एवेति सविमर्शं समर्थितम् ।

चतुर्थे प्रकरणे भेदः दुर्निरूपः, मायिकः, भेदपक्षेऽनवस्थादयो दोषा अपरिहार्याः, भेदपक्षे सम्बन्धादीनां निरूपणं दुश्शकम्, भेदः किं धर्मिस्वरूपभूतो न वा ? स पृथक्त्वादिरूपो वा ? इत्यादिनैकविधशङ्का अनूद्य भेदस्य धर्मिस्वरूपत्वं प्रमाणसिद्धत्वममायिकत्वं च सप्रमाणं निरूपितम् ।

ग्रन्थरत्नमिदं मोक्षसाधनीभूतभेदज्ञानजननायात्यन्तमुपकारीति निश्प्रचम् । यद्यप्ययं प्रबन्धः बहोः कालात् प्राक् परिमळप्रकाशन-मन्दिरद्वारा, अधुना श्रीराघवेन्द्रस्वामिमठद्वारा च प्राकाश्यं नीतः । प्राक्तनं प्रकाशनं समभिनन्द्य मातृकासाहाय्येन समुचितप्रमाण-टिप्पण्याद्युल्लेखपुरस्सरं प्रकाशितस्यास्य ग्रन्थस्य नावीन्यमपि सानन्द-मुल्लिखामः । अस्मदीयपूर्णप्रज्ञसंशोधनट्रस्ट्संस्थया प्रकाश्यमानस्यास्य ग्रन्थरत्नस्य मुद्रणार्थं समुचितवित्तप्रदानेन साह्यं विहितवतोः हरिगुरु-सेवारतयोः श्रीमतीशुभा-श्रीरङ्गनाथदम्पत्योः अस्मदाराध्यः मध्वहृदय-वल्लभः श्रीकृष्णः शं तनोत्विति साभिमानमाशीर्भिस्तावनुगृह्णीमः ।

ग्रन्थस्यास्य शोधनेन शास्त्रसेवां विहितवतेऽस्मत्प्रियच्छात्राय अडिगोपाह्वाय शङ्करनारायणाय विदुषे अस्मदाराध्यः श्रीकृष्णः ज्ञानाभिवर्धनेन समनुगृह्णातु, अविच्छिन्नां च शास्त्रसेवां चानेन स्वीकरोत्विति सम्प्रार्थ्य आशीर्भिरभिनन्दामहे ।

इति श्रीमन्नारायणस्मृतयः

**श्रीविश्वेशतीर्थश्रीपादाः**

## Director's Note

Sri Vijayeendratirtha Swamiji (1514-1595 AD) of Sri Raghavendra Matha lineage is creative contributor of Shad-darshanas (Six systems of Indian Philosophies). He is author of 104 texts. 'Chaturadhika-shata-grantharatna-praneta'.

The present text concentrating to review to the arguments placed in Bheda-dhikkara of Sri Nrusimhashrami. Four chapters are here.

First chapter is proving/supporting the Bheda (difference between Jiva (Self) and God (Brahman) ) doctrine established in Dvaita philosophy. Few authors of Advaita are not considered validity (Pramanya) of mind. Here Sri Swamiji examined theories of Advaitins and established the validity of mind. He also clearly states that difference between Jiva-Jada-Paramatma, totally five categories of difference is known/recorded by our conscience (Sakshi).

In the second chapter proves the Beda concept on the basis of inference (Anumana). The third chapter is devoted to an examination of Shruti (sacred texts) the celebrated monustic texts 'Tattvamasi', 'Aham Brahmasmi', 'Dvasuparna', Yo anyam devatamupaste' etc., citations discussed at lengthe and the conclusion is established that the doctrine of difference is supported by secrete scriptures.

Fourth and final chapter is devoted to answer the objections raised by Sri Harsha author of Khandana-khanda-khadya. The Bhedavidyavilasa of Sri Vijayeendratirtha established the doctrine of five categories of Bheda are natural, reals and eternal. The Bedavidyavilasa was published by Nanjanagudu Parimala Grantha Prakashana Mandira in 1945. Recently it is published by Sri Raghavendra Matha. Present edition is based on readings of three manuscripts and useful notes. I hope this edition will be useful scholars and students of the Indian philosophy.

The source of inspiration behind this useful venture is our founder H.H. Sri Sri Vishveshatirtha Swamiji. To him we owe all we have and all we shall have. How can we repay him for his support and encouragement except through our gratitude and Pranamas !

Dr. Shankaranarayana Adiga, learned scholar of Nyaya & Vedanta has critically edited the text with the help of three manuscripts. He took special pain in fixation of correct texts and added notes and valuable introduction. I pray God, to bestow Dr. Adiga to continue the activity of unpublished and valuable manuscripts' publication in future

I express my gratitude to Smt. Shubha and Sri Ranganatha, who supported our publication activities by providing sufficient finanical help. I also record their

kind help rendered in our previous seminar activities and publication activities.

I thank M/s. Lavanya Mudrana who have printed neatly in a short span of time. I hope they extend the same co-operation in future also.

**Dr. A V Nagasampige**
**Director**

# प्रस्तावना

इह खलु समग्रे वैरिञ्चे प्रपञ्चे सकलोऽपि लोकः 'सुखमेव मे स्यात्, दुःखं मनागपि माभूत्' इति सकलानिष्टनिवृत्तिपूर्वकसुखप्राप्तिलक्षणं मोक्षं कामयते । स च मोक्षः सकलजीवजडात्मकात् प्रपञ्चात् परमार्थतोऽत्यन्तभिन्नतया निखिलगुणपूर्णतया निरस्तसमस्तदोषतया च भगवतो यथार्थज्ञानाद् भवतीत्याघोषयति भगवती श्रुतिः ।

'तमेवं विद्वान् अमृत इह भवति नान्यः पन्था अयनाय विद्यते' (तै.आ. ३.१२) इति ।

तादृशदुःखप्रहाणसाधनभगवज्ज्ञानार्थमेव वेदानां प्रवृत्तिरिति च श्रूयते -

'अदुःखमितरत् सर्वं जीवा एव तु दुःखिनः ।
तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते ।।' इति ।

कालान्तरे कलिकालतः निगमार्थनिर्णयविधुराणां सज्जनानां हितं कर्तुकामैश्चतुर्मुखपञ्चमुखादिवृन्दारकैरभ्यर्थितो भगवान् नारायणो व्यासत्वेनावतीर्य वेदार्थनिर्णायकानि ब्रह्मसूत्राणि चकार ।

## ब्रह्मसूत्राणामावश्यकता

ब्रह्मसूत्रसहकृतेनैव वेदेन तत्त्वज्ञानं जायते । केषुचिद् वेदवाक्येषु आपाततः परस्परविरुद्धार्थप्रतिपादकत्वं प्रतीयते । क्वचित् वेदवाक्येभ्यः संशयः, विपरीतज्ञानं च जायते । तत्र सर्वत्र श्रुत्यर्थनिर्णायकन्यायग्रथनात्मकब्रह्मसूत्रसाहाय्येन तत्त्वनिर्णयः

सम्पाद्यते । ब्रह्म= वेदः, तस्य सूत्राणि तदर्थनिर्णायकसूत्राणि ब्रह्मसूत्राणि भवन्ति । अथवा, ब्रह्म= वेदप्रतिपाद्यं परब्रह्म । तस्य सूत्राणि तत्स्वरूपनिर्णायकाणि सूत्राणि ब्रह्मसूत्राणीत्यर्थः ।

सूत्रारूढसिद्धान्तस्यैव विश्वमान्यता । भारतीयदार्शनिकप्रपञ्चे तु भगवद्गीतायाः, उपनिषदां, ब्रह्मसूत्राणां भाष्यकर्तैव भवति स्वसमय-व्यवस्थापकः। इतोऽन्यथा तस्य दर्शनस्य जगन्मान्यता न सिद्ध्यति । अतः श्रीमदानन्दतीर्थभगवत्पादाचार्यैरपि ब्रह्मसूत्रेषु, उपनिषत्सु, पुराणेतिहासादिग्रन्थेषु श्रीवेदव्यासाभिमतवैदिकतत्त्ववादसिद्धान्तः स्वीयसर्वमूलग्रन्थद्वारा न्यरूपि । द्वैतसिद्धान्तप्रतिष्ठापकानां श्रीमध्वाचार्याणां (क्रिस्ताब्द - १२००-१२८०) बहोः कालादनन्तरं श्रीमज्जयतीर्थश्रीमच्चरणाः महाराष्ट्रप्रदेशे सोलापुरमण्डलान्तर्गते मङ्गलवेडग्रामे जज्ञिरे । एतेषां कालः क्रिस्तीय १३६५ वर्षादारभ्य १३८८ वर्षावधिकः । एते महाभागाः श्रीमदानन्दतीर्थेभ्यः चतुर्थेभ्योऽक्षोभ्यतीर्थेभ्यः पारिव्राज्यम् अध्यात्मविद्यां चाधिगम्य श्रीमदाचार्यकृतानामष्टादशग्रन्थानां टीकामारचयामासुः ; 'टीकाकृत्पादाः' इति बिरुदाङ्किताः बभूवुः ।

तदनन्तरं द्वैतसिद्धान्ते परवादिभिरारोपितान् दोषाभासान् परिजिहीर्षया प्रह्लादनामा देवश्रेष्ठः व्यासतीर्थनाम्ना भुवि अवतीर्य चन्द्रिका-न्यायामृतादिग्रन्थप्रवरान् विरचय्यामितयुक्तिनिकरैः परपक्ष-खण्डनेन द्वैतसिद्धान्तं स्थापयामास । श्रीमद्व्यासतीर्थश्रीमच्चरणाः टिप्पणीग्रन्थान् अपूर्ववादग्रन्थान् स्वतन्त्रकृतीश्च व्यरीरचन् । तदनन्तरग्रन्थकर्तृषु विशिष्टस्थानभाजः त्रयो यतिशेखराः प्रख्याताः ।

ते एव श्रीवादिराजतीर्थाः, श्रीविजयीन्द्रतीर्थाः, श्रीरघूत्तमतीर्था इति । एतेषु श्रीविजयीन्द्रतीर्थाः (क्रिस्ताब्द १५१४-१५९५) द्वैतसिद्धान्त-शास्त्रकारेषु अग्रगण्याः स्वीयानितरसाधारणवैदुष्येण चतुरधिक-शताधिकग्रन्थान् विरचय्य मध्वसिद्धान्तवृक्षे पुष्पविकासनिमित्तभूता अभूवन् इति श्रीगुरुगुणस्तवने श्रीवादीन्द्रतीर्थानां प्रशंसापात्रभूताः सन्ति -

'व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धाङ्कुरश्रीः
प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशव्यासराजादुदितकिसलयः **पुष्पितोऽयं जयीन्द्राद्**
अद्य श्रीराघवेन्द्राद् विलसति फलितो मध्वसिद्धान्तशाखी ॥'

(गुरुगुणस्तवनम् , ३७) इति ।

भेदविद्याविलासाख्यप्रकृतग्रन्थकर्तारः श्रीविजयीन्द्रतीर्थश्रीपादाः पूर्वाश्रमे विठ्ठलाचार्य इति सुगृहीतनामधेयाः स्वाश्रमगुरूणां श्रीव्यासतीर्थगुरुचरणानां सकाशात् पारिव्राज्यं विद्यां चाधिजग्मुः । श्रीविष्णुतीर्था इति नामधेयं च प्रापुः । अनन्तरं च श्रीराघवेन्द्रमठ-परम्पराया आधारभूतानां श्रीविबुधेन्द्रतीर्थश्रीपादानां पीठमलङ्कृतवद्भ्यः श्रीसुरेन्द्रतीर्थश्रीपादेभ्यः श्रीव्यासतीर्थश्रीपादैः तत्पीठोत्तराधिकारित्वेन समर्पिताः सन्तः श्रीविजयीन्द्रतीर्था इति तैः कृतसुनामान्तरा अभूवन् । श्रीमद्विजयीन्द्रतीर्थश्रीपादाः श्रीहंसनामकपरमात्मप्राप्तं श्रीविबुधेन्द्र-तीर्थपीठमलङ्कृत्य चतुरधिकशतग्रन्थान् रचयामासुः । चतुःषष्टिविद्यासु निपुणा एते परवादिनो वादेऽजयन्, स्वयशः दिग्दिगन्तेषु विस्तारयामासुः । तथा चोक्तं श्रीवादीन्द्रतीर्थैः-

'चातुर्यैकाकृतिर्यच्चतुरधिकशतग्रन्थरत्नप्रणेता
धूतारातिप्रबन्धः स्फुटविदितचतुःषष्टिविद्याविशेषः ।
सोऽयं नः श्रीसुरेन्द्रव्रतिवरतनयोऽद्वैतशैवासहिष्णुः
पुष्णातु श्रीजयीन्द्रस्त्रिभुवनविदितस्सर्वतन्त्रस्वतन्त्रः ॥'

(गुरुगुणस्तवनम् ८) इति ।

अन्यैरसाध्यं कार्यमेतैः साधितम्; यत् चतुरधिकशतग्रन्थप्रणयनम् । बुधा एतैर्महामहिमोपेतैः पूर्वमीमांसायां, व्याकरणे, न्यायशास्त्रे, वेदान्तशास्त्रे च विरचितान् ग्रन्थान् श्रोतुम् अध्येतुं वा वर्षशतेनापि न पारयन्ति । यदि एषां ग्रन्थानामाख्याः समाख्याति तर्हि स पण्डित इति विद्वन्मण्डल्यां परिगण्येतेति वदन्ति नारायणाचार्याः -

'वाक्ये पदे पादविलोचनोक्तौ व्यासीयशास्त्रे च कृतान् प्रबन्धान् ।
आस्तां बुधः श्रोतुमशेषमेषाम् आख्याः समाख्याद् यदि पण्डितोऽसौ ॥'

(श्रीराघवेन्द्रविजयः २.२२) इति ।

श्रीमद्विजीयीन्द्रतीर्थश्रीपादानां चतुरधिकशतग्रन्थेषु केचनोपलब्धाः प्रकाशिताश्च, केचनाप्रकाशिताः, केचनानुपलब्धाः । तेषां विवरणमेवमस्ति -

**सूत्रप्रस्थानग्रन्थाः -**

१. ओङ्कारवादार्थः
२. तत्त्वमाणिक्यपेटिका
३. ब्रह्मसूत्राधिकरणमाला
४. ब्रह्मसूत्रन्यायसङ्ग्रहः
५. सूत्रार्थसङ्ग्रहः
६. अनुव्याख्यानटिप्पणी
७. न्यायसुधाव्याख्याबिन्दुः
८. अणुभाष्यव्याख्या

९. न्यायविवरणटीका
१०. अधिकरणरत्नमाला
११. नयपञ्चकमाला
१२. (मध्वतन्त्र)नयमञ्जरी
१३. न्यायमुकुरः
१४. न्यायमौक्तिकमाला

**श्रुति-उपनिषत्प्रस्थानग्रन्थाः -**

१५. ऋग्भाष्यटिप्पणी
१६. ईशावास्योपनिषद्भाष्यटीकाटिप्पणी
१७. तैत्तिरीयोपनिषद्भाष्यव्याख्या
१८. केनोपनिषद्भाष्यव्याख्या
१९. ऐतरेयोपनिषद्भाष्यव्याख्या
२०. षट्प्रश्नोपनिषद्भाष्यटीकाटिप्पणी
२१. काठकोपनिषद्भाष्यव्याख्या
२२. मुण्डकोपनिषद्भाष्यव्याख्या
२३. माण्डूक्योपनिषद्भाष्यव्याख्या
२४. छान्दोग्योपनिषद्भाष्यव्याख्या
२५. बृहदारण्यकोपनिषद्भाष्यव्याख्या
२६. श्रुतितत्त्वप्रकाशिका
२७. श्रुत्यर्थसारः
२८. श्रुतितात्पर्यकौमुदी
२९. द्वासुपर्णा इत्यादीनां भेदपरत्वसमर्थनम्

**गीताप्रस्थानग्रन्थाः -**

३०. गीताक्षरार्थः
३१. गीताभाष्यप्रमेयदीपिकाव्याख्या
३२. गीतातात्पर्यन्यायदीपिकाव्याख्यानम्

**प्रकरणग्रन्थटिप्पण्यः**

३३. प्रमाणलक्षणटीकाटिप्पणी　３४. कथालक्षणटीकाटिप्पणी
३५. तत्त्वसङ्ख्यानटीकाटिप्पणी　३६. तत्त्वविवेकटीकाटिप्पणी
३७. उपाधिखण्डनटीकाटिप्पणी　३८. मायावादखण्डनटीकाटिप्पणी
३९. मिथ्यात्वानुमानखण्डनटीकाटिप्पणी
४०. विष्णुतत्त्वनिर्णयटीकाटिप्पणी
४१. तत्त्वोद्योतटीकाटिप्पणी　४२. कर्मनिर्णयटीकाटिप्पणी
४३. प्रमाणपद्धतिव्याख्या

**व्यासत्रयटिप्पण्यः -**

४४. युक्तिरत्नाकरः (तर्कताण्डवव्याख्या)
४५. तात्पर्यचन्द्रिकाव्याख्या
४६. तात्पर्यचन्द्रिकाभूषणम्
४७. चन्द्रिकोदाहृतन्यायमाला (चन्द्रिकोदाहृतन्यायविवरणम्)
४८. तात्पर्यचन्द्रिकाकुचोद्यपरिहारः
४९. न्यायामृतामोदः　५०. न्यायामृतमध्यमामोदः
५१. न्यायामृतगुर्वामोदः
५२. न्यायामृतोदाहृतजैमिनीयन्यायमाला
५३. न्यायामृतकण्टकोद्धारः

**स्वतन्त्रग्रन्थाः -**

५४. पदार्थसङ्ग्रहः　५५. नारायणशब्दार्थनिर्वचनम्
५६. चक्रमीमांसा　५७. पञ्चसंस्कारदीपिका

५८. सिद्धान्तसारासारविवेचनम्
५९. वाग्वैखरी
६०. वादमालिका
६१. मीमांसानयकौमुदी
६२. पिष्टपशुमीमांसा
६३. भेदचिन्तामणिः
६४. भेदप्रभा
६५. भेदसञ्जिविनी
६६. भेदागमसुधाकरः
६७. भेदकुसुमाञ्जलिः
६८. मध्वसिद्धान्तसारोद्धारः
६९. विरोधोद्धारः
७०. विष्णुपारम्यम्

**खण्डनग्रन्थाः -**

७१. परतत्त्वप्रकाशिका
७२. सन्मार्गदीपिका
७३. प्रणवदर्पणखण्डनम्
७४. उपसंहारविजयः
७५. अद्वैतशिक्षा
७६. भेदविद्याविलासः
७७. भट्टोजिकुट्टनम्
७८. मध्वतन्त्रमुखभूषणम्
७९. मध्वाध्वकण्टकोद्धारः
८०. लिङ्गमूलान्वेषणविचारः
८१. शैवसर्वस्वखण्डनम्
८२. श्रवणविधिविलासः
८३. चित्रमीमांसाखण्डनम्
८४. अप्पय्यकपोलचपेटिका
८५. कुचोद्यकुठारः
८६. तुरीयशिवखण्डनम्
८७. आनन्दतारतम्यवादार्थः

**स्तोत्राणि -**

८८. श्रीनृसिंहाष्टकम्
८९. विष्णुस्तुतिव्याख्यानम्
९०. दुरितापहारस्तोत्रम्
९१. श्रीश्रीपादराजाष्टकम्
९२. श्रीव्यासराजस्तोत्रम्

**काव्यानि -**

९३. श्रीव्यासराजविजयः
९४. सुभद्राधनञ्जयः
९५. व्यासराजाभ्युदयः
९६. उभयग्रस्तराहूदयः

**परमतसङ्ग्रहग्रन्थाः -**

९७. न्यायाध्वदीपिका
९८. श्रीरामानुजमतरीत्या सूत्रार्थः

श्रीमद्भिः श्रीविजयीन्द्रतीर्थश्रीपादैर्विरचितेषु चतुरधिकशताधिकेषु ग्रन्थेषु भेदविद्याविलासरूपो ग्रन्थप्रवरो नृसिंहाश्रममुनिप्रणीतस्य 'भेदधिक्कारः' इत्याख्यस्य ग्रन्थस्य खण्डनरूपः । ग्रन्थेऽस्मिन् सव्याख्यानभेदधिक्कारग्रन्थस्थवाक्यान्यनूद्य सम्यग् विमृष्टानि । भेदविद्याविलासेऽस्मिन् ग्रन्थे चत्वारः परिच्छेदाः सन्ति । प्रत्यक्ष-परिच्छेदः, अनुमानपरिच्छेदः, श्रुतिपरिच्छेदः भेदस्वरूपमिति येषु सप्रमाणं भेदस्वरूपं व्यवस्थापितम् ।

**प्रत्यक्षपरिच्छेदः**

जीवेश्वरयोः वास्तवभेदमङ्गीकुर्वाणान् द्वैतिनः प्रत्यभेदवादिन एवमाक्षिपन्ति - तत्र 'अहम्' इति प्रतीतौ भासमानो यो जडातिरिक्तो जीवः स परमात्मनो न भिद्यते चेतनत्वात् 'तत्त्वमसि' इति वाक्यस्थ-पदार्थत्वाद्वा, ब्रह्मवत् इत्यनुमानेन जीवपरमात्मनोरभेदसिद्ध्या तयोर्वास्तवभेदे प्रमाणं नास्ति । तथाहि- 'जीवपरमात्मनोः भेदे प्रत्यक्षप्रमाणं नास्ति । अनुपलब्धेः । ननु 'नाहमीश्वरः' इत्यादिप्रत्यक्षमेव जीवेश्वरभेदे प्रमाणं भवितुमर्हति । तच्च प्रत्यक्षं न भ्रमः । किन्तु प्रमैव । बाधकाभावात् । इति चेन्न । अत्रायं विचारः

कर्तव्यः । 'नाहमीश्वरः' इति ज्ञानं केन प्रमाणेन जायत इति । न तावदिदं चक्षुरादिजन्यम् । आत्मज्ञानस्य चक्षुराद्यजन्यत्वात् । अथ मनसा जन्यमिदं ज्ञानम् । तस्मात् मन एव जीवेश्वरभेदे प्रमाणं भवितुमर्हतीति चेन्न । प्रमाणान्तरसहकारिणो मनसः प्रमाणत्वायोगात् । तथा चात्रानुमानप्रयोगः -

'मनः न प्रमाणं प्रमाणसहकारित्वादलोकवत्' इति । यच्च प्रमाणभूतं न तत् प्रमाणान्तरसहकारि । यथा चक्षुरादिकम् । अथ मन एव प्रमाणमस्तु । चक्षुरादि तु मनसः सहकारीत्येवाङ्गीक्रियताम् इति तु न शङ्क्यम् । चाक्षुषादिज्ञाने मानसत्वमनुभवविरुद्धम् ।

किञ्च, मनसः प्रमाकरणत्वे तस्य सर्वज्ञानकारणत्वेन तदेव सर्वत्र प्रमाणं स्यात् । चक्षुरादि तु तत्र तत्र आलोकादिवत् सहकारिमात्रमिति ज्ञानसामान्यस्य मनःकारणकत्वापत्त्या मानसत्वापत्तिर्दोषः । तस्मात् मनः प्रमाणमिति नाङ्गीकर्तुं शक्यते । एवं चेदमत्राऽयातम् । 'नाहमीश्वरः' इति ज्ञानस्य क्लृप्तकारणाभावाद् भ्रान्तित्वं निश्चीयते ।

अत्रायं सिद्धान्तः -

अस्ति तावत् सर्वेषाम् 'अहं सुखी' इति सुखदुःखाद्यनुभवः । तस्य च क्लृप्तं चक्षुरादि न कारणम् । किन्तु मनसैवायमनुभवः जायते । एवं च सुखाद्युपलब्धौ मनसः करणत्वं क्लृप्तम् । तथा च सुखाद्यनुभवे मनस एव प्रमाणत्वे 'नाहमीश्वरः' इति जीवेश्वरभेदविषयकप्रत्यक्षमपि मनःप्रमाणकमिति सिद्ध्यति । न च अतीन्द्रियेश्वरभेदः कथं प्रत्यक्षग्राह्यो भवितुमर्हति प्रत्यक्षप्रतियोगिकाभावस्यैव प्रत्यक्षत्वादिति शङ्क्यम् ।

अभावप्रत्यक्षे प्रतियोगिप्रत्यक्षस्याकारणत्वात् । अस्मदादीनां 'नाहं पिशाचः' इति प्रत्यक्षानुभवस्य सत्त्वात् । किन्तु प्रतियोगिज्ञानमात्रं तन्त्रम् । तच्चेश्वरज्ञानं शास्त्रादितः जातं सर्वेषामस्ति ।

**मनसः प्रामाण्यसमर्थनम्**

यदुक्तं चाक्षुषादिज्ञाने जनयितव्ये चक्षुरादीनां प्रमाणानां मनसः सहकारित्वेन मनसोऽप्रामाण्यम् । यथा रूपादिसाक्षात्कारे जनयितव्ये चक्षुस्सहकारिण आलोकस्य प्रामाण्यं नास्तीति तदयुक्तम् । रूपादि-साक्षात्कारे सहकारिण आलोकस्य प्रमाणत्वाभावेऽपि वह्न्यनुमानस्थले आलोकविशेषस्य धूमस्येव अनुमितिरूपप्रमाजनकत्वदर्शनेन व्यभिचारात् ।

अथ येन रूपेण यस्य प्रमाणान्तरत्वं न तेन रूपेण तस्य प्रमाणान्तरसहकारित्वम् । आलोकविशेषस्य तु वह्निव्याप्यत्वादिरूपेण वह्न्यनुमापकत्वरूपप्रमाणान्तरत्वम्, आलोकत्वेन रूपेण चक्षुरादि-प्रमाणसहकारित्वमिति भेदो वर्तत इति चेत् समं प्रकृतेऽपि । इन्द्रियत्वेन मनसः 'नाहमीश्वरः' इत्यादिप्रमाकरणत्वं, मनस्त्वेन रूपेण चक्षुरादिप्रमाणान्तरसहकारित्वाङ्गीकारेणाऽलोकादिवन्मनसः प्रमाण-त्वोपपत्तेः ।

किञ्च 'मानसप्रत्यक्षजा स्मृतिः' (प्रमाणलक्षणम्, पृ. १३१) इति श्रीमदानन्दतीर्थभगवत्पादैः स्मृतिलक्षणं न्यरूरुपि । सा च स्मृतिः द्वैतसम्प्रदाये केवलप्रमाणम् । तत्करणं च मनः प्रत्यक्षप्रमाणं भवितुमर्हति । नेन्द्रियमात्रम् । मनसश्च स्मरणजनने उद्बुद्धसंस्कार एव

सन्निकर्षः । एवं च मनसः स्मरणं प्रति यथा इन्द्रियत्वेन करणत्वं तथा 'नाहमीश्वरः' इत्यादिप्रत्यक्षं प्रति मन एव इन्द्रियत्वेन करणं भवति । तथा च जीवानुयोगिकेश्वरप्रतियोगिकभेदे प्रत्यक्षं प्रमाणमस्तीति सिद्धम् ।

अथ मनस इन्द्रियत्वमेव नास्ति तस्याभौतिकत्वादिति चेन्न । मनस इन्द्रियत्वस्य प्रमाणसिद्धत्वात् । तथा च प्रमाणानि -

'इन्द्रियाणां मनश्चास्मि' (भ.गी. १०.२२)

'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥' (भ.गी. १३.६)

इति गीतायां भगवान् इन्द्रियपरिगणनदशायां मनोऽपि सञ्जग्राह । अमरकोशकारोऽपि -

'कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम्' (अ.को. १.५.८)

इति ज्ञानेन्द्रियमध्ये मनः समगृह्णात् ।

तस्मादिदमत्र सुसम्पन्नम् । यत् ज्ञानसामान्यं प्रति मनस्त्वेन, प्रत्यक्षज्ञानं प्रति इन्द्रियत्वेन सुखादिसाक्षात्कारं प्रति प्रमाणान्तरासहकृतमनस्त्वेन मनः कारणमिति हेतोः मनसः स्वातन्त्र्येणापरोक्षज्ञानजनकत्वं दृष्टपूर्वम् ।

न चेन्द्रियत्वेन मनसो जनकत्वे प्रमाणाभाव इति वाच्यम् । मनस इन्द्रियत्वाभावे मनोजन्यसुखादिज्ञाने साक्षात्कारत्वं न स्यात् ।

न च सुखादिसाक्षात्कारस्य साक्षिरूपतया मनोजन्यत्वाभावेऽपि साक्षात्कारत्वोपपत्तिरिति वाच्यम् । सुखादिसाक्षात्कारस्योत्पाद-विनाशानुभवेन मनोजन्यत्वसिद्धेः ।

एवम्प्रकारेण मनसः प्रमाकरणत्वसिद्ध्या तेन भेदग्रहो जायत इति सिद्धम् । मनसा जीवानुयोगिकेश्वरप्रतियोगिकभेदग्रहे मनःसम्बद्ध-विशेषणतैव सन्निकर्षः । यत इन्द्रियेणाभावग्रहे इन्द्रियसम्बद्ध-विशेषणतायाः सन्निकर्षत्वाभ्युपगमात् ।

वस्तुतस्तु सुखादिसाक्षात्कारो न मनोजन्यः । किन्तु साक्षिरूप एव । सुखाद्यनुभवस्योत्पादविनाशप्रतीतिस्तु सुखाद्युत्पादविनाश-विषयकत्वोपपत्तेः, अनुभवरूपविशेषस्य तु नित्यसाक्षिरूपत्व-मबाधितमेव भवति । अथ भेदोऽपि साक्षिविषय एव स्यात् कुतस्तद्ग्रहे मनःप्रामाण्यपर्यन्तानुधावनमिति चेत् न कापि हानिरस्माकम् । तावताऽपि भेदस्य प्रत्यक्षत्वानपगमेन इष्टसिद्धेः ।

न चैवं मनसो भेदादिरूपपृथग्विषयाभावात् प्रमाकरणत्वमेव न स्यादिति शङ्क्यम् । मोक्षसाधनीभूतपरमात्मसाक्षात्कारस्य मनसैव जायमानत्वेन तत्प्रामाण्योपपत्तेः । तत्रापि 'मनसैवानुद्रष्टव्यम्' (बृ.उ. ४.४.१९) इत्यादिश्रुतयः प्रमाणानि सन्ति । न च, परमात्मा 'यन्मनसा न मनुते' (के.उ. १.६) इत्यादिश्रुत्या मनोऽगोचरत्वेनोक्तः कथं मानससाक्षात्कारविषयो भवितुमर्हतीति शङ्क्यम् । तच्छ्रुत्युक्त-निषेधस्य साकल्येन मनोऽगोचरत्वपरत्वेन अनवहितमनोऽ-गम्यत्वार्थकत्वेन वा विरोधाभावात् । अत एव ' दृश्यते त्वग्र्यया

बुद्ध्या' (कठ.उ. ३.१२) इति भगवतोऽग्र्यबुद्धिजन्यसाक्षात्कार-विषयत्वोक्तिः सूपपद्यते ।

एवं च जीवानुयोगिकेश्वरप्रतियोगिकभेदे प्रत्यक्षं प्रमाणमिति सिद्धम् । तथैव जीवप्रतियोगिकेश्वरधर्मिको भेदोऽपि प्रत्यक्ष एव । तस्यास्मदादिप्रत्यक्षाविषयत्वेऽपि भगवत्प्रत्यक्षविषयत्वात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (भ.गी. १५.१५) इति भगवद्वचनेनैव तस्य स्वानुयोगिकजीवप्रतियोगिकभेदप्रत्यक्षमस्तीति ज्ञायते । अतस्तत्र तद्वचनमेव प्रमाणम् । एवं जीवानामन्योन्यभेदेऽपि 'नाहं देवदत्तः' इत्यादिप्रत्यक्षं प्रमाणम् ।

एवमत्र परिच्छेदे जीवेश्वरभेदे मानसं प्रत्यक्षप्रमाणमुपापादि । प्रसङ्गात् योग्यानुपलब्धेर्निर्वचनासम्भवशङ्कानिरसनपूर्वकं योग्यानुपलब्धेः निर्वचनम्, 'नाहमीश्वरः' इति प्रतीयमानस्य भेदस्यौपाधिकत्व-निरासपूर्वकं स्वाभाविकत्वसमर्थनम् इत्यादिविषया विद्वज्जनाप्याय-मानशैल्या दुर्वारामितयुक्तिनिकरैः श्रीश्रीविजयीन्द्रश्रीपादैः उपापादिषत ।

**अनुमानपरिच्छेदः**

द्वितीयेऽनुमानपरिच्छेदे जीवेश्वरभेदेऽनुमानप्रमाणमुदाहृतम् । तथा हि- जडातिरिक्तोऽहमिति प्रतीयमानोऽर्थो ब्रह्मधर्मिकभेदप्रतियोगी, तत्प्रतियोगिभेदवान् वा परिच्छिन्नत्वादसर्वज्ञत्वाद्वा घटवद् इति अस्यानुमानस्य सिद्धसाधनत्वव्याप्यत्वासिद्ध्यप्रयोजकत्वादिदोषान् आशङ्क्य, व्यावहारिकभेदमादाय सिद्धसाधनत्वेऽतिप्रसक्तिः, बाधादेरुच्छेदापत्तिश्च स्यादित्यादिप्रकारेण तान् दोषान् व्युदस्य

जीवेश्वरभेदस्य आनुमानिकत्वं व्यवास्थापि । अत्र प्रदर्शिताः केचनानुमानप्रयोगाः -

१. जीवेश्वरभेदः पारमार्थिकः, अनिषेध्यत्वेन प्रमाविषयकत्वात् ब्रह्मवत् । न च 'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ. ३.७.२३) इत्यादिश्रुत्या जीवेश्वरभेदनिषेधेनास्यानुमानस्य बाधो दोषः स्यादिति शङ्क्यम् । तस्याः श्रुतेरीश्वरसमानद्रष्ट्रन्तरनिषेधप्रतिपादकत्वेन बाधासिद्धेः ।

२. जीवो न ब्रह्माभिन्नः परिच्छिन्नत्वाद् घटवत् इत्यनुमानेनाभेदाभावसिद्धौ भेदसिद्धिः निष्प्रत्यूहा ।

एवमेव जीवानां परस्परभेदेऽनुमानं प्रमाणमस्ति ।

'देवदत्तात्मा यज्ञदत्तात्मप्रतियोगिकानौपाधिकभेदवान् तद्दुःखाननु-सन्धातृत्वात् घटवत्' न चात्राप्रयोजकत्वं शङ्क्यम् । विपक्षे हेतूच्छित्तिरूपबाधकसद्भावात् ।

अथवा चैत्रो मैत्रप्रतियोगिकतात्त्विकभेदवान् तदनुभूतसर्वाननु-भवितृत्वात् घटवत् । इत्यादिप्रयोगाः जीव-जीवभेदे द्रष्टव्याः ।

**श्रुतिपरिच्छेदः**

तृतीये श्रुतिपरिच्छेदे भेदस्य निगमवेद्यत्वं समर्थितम् । तत्र प्रथमत इमाः शङ्का उद्भाविताः । आदौ जीवेश्वरभेदस्य 'नाहमीश्वरः' इति प्रत्यक्षवेद्यत्वप्रतिपादनेन न भेदे श्रुतेस्तात्पर्यं कल्पयितुं शक्यम् । श्रुतेश्च भेदे तात्पर्याभावे तत्र प्रामाण्यं न सिद्ध्यति ।

तात्पर्यविषयीभूतार्थ एव शब्दस्य प्रामाण्यादिति शङ्का प्रादर्शि । शङ्कायाश्चस्याः, निरुपाधिकात्मभेदस्य प्रत्यक्षाप्राप्ततया श्रुतेस्तत्र तात्पर्योपपादनद्वारा समाधिः प्रतिविहिता ।

अपरेयं शङ्का - भेदज्ञानस्यानवद्यपुमर्थसाधकत्वाभावाच्च न श्रुतेर्भेदपरत्वम् । प्रत्युत ''उदरमन्तरं कुरुते । अथ तस्य भयं भवति' (तै. ३.२.७), 'मृत्यो स मृत्युमाप्नोति य इह नानेव पश्यति' (कठ. ४.१०) इति भेदज्ञानादनर्थप्राप्तिरूपदुष्फलश्रवणाच्च न भेदपरत्वं निगमस्य । किञ्च क्वचन भेदनिन्दा श्रूयते श्रुतौ । 'अथ येऽन्यथाऽतो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ति । अथ योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' (बृ.उ. १.४.१०) इति । एवं वेदेनैव भेदस्य निन्दित्वान्न भेदे वेदस्य तात्पर्यम् । तस्माद् भेदे आगमो न प्रमाणम् इतीमाः शङ्का उद्भाविताः ।

तत्रैवं समाधानं प्रतिविहितम् । 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' (श्वेताश्व. १.६), 'जुष्टं यदा पश्यत्यन्य-मीशमस्य महिमानमिति वीतशोकः' (श्वेताश्व. ४.७) इत्यादिश्रुत्या, 'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् । स सर्वविद् भजति मां सर्वभावेन भारत ।।' (भ.गी. १५.१९) इत्यादिस्मृत्या च भेदज्ञानेन मोक्षरूपपुरुषार्थसिद्धिश्रवणाद् भेदे श्रुतेस्तात्पर्यं युक्तम् । 'उदरमन्तरं कुरुते' (तै. ३.२.७) इत्यादिश्रुतेर्मिथ्याभूतभेददर्शनपरत्वान्न भेद-निन्दायां तच्छ्रुतेस्तात्पर्यम् । प्रत्युताभेदज्ञानिन एव दुःखिजडा-त्मकत्वप्रतिपादनमुखेन निन्दनादभेदज्ञानस्य पुमर्थसाधकत्वं नास्ति ।

एवं च जीवेश्वरभेदे आगमप्रामाण्यमत्र परिच्छेदे विस्तरेण प्रत्यपादि । एवं जीवानां परस्परं भेदेऽपि श्रुतिः प्रमाणम् । 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनाम्' (श्वेताश्व. ६.१३), 'परामृतात् परिमुच्यन्ति सर्वे' (महाना. ८.१५), 'सदा पश्यन्ति सूरयः' (कठ. ३.९) इत्यादय आगमाः जीव-जीवभेदे प्रमाणानि सन्ति ।

**चतुर्थः परिच्छेदः**

अस्मिन् परिच्छेदे भेदस्वरूपं निर्वक्तुं न शक्यते । यतः भेदो नाम पृथक्त्वं वा, विभागो वा, वैलक्षण्यं वा अन्योन्याभावो वा वक्तव्यः । एतेषु पक्षेषु अनुपपत्तीः प्रदर्श्य भेदस्वरूपनिराकरणं यदकारि तत्र भेदमात्रस्याप्रामाणिकत्वे भेदप्रतीतिनिवृत्त्यै परमते श्रवणादौ प्रवृत्तिर्न युज्येतेत्यादियुक्त्या भेदस्वरूपं स्थिरीकृतम् ।

'अन्या वाचो विमुञ्चथ' (मुण्ड. २.२.५),'नान्यः पन्थाः' (श्वेताश्व. ३.८), 'नान्यच्छ्रेयो वेदयन्ते प्रमूढाः' (मुण्ड. १.२.१०), 'इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' (कठ. ५.५), 'चार्थे द्वन्द्वः' (पा.सू. २.२.२९), 'उत्तमः पुरुषस्त्वन्यः' (भ.गी. १५.१५), 'भेदव्यपदेशाच्चान्यः' (ब्र.सू. १.१.२१) इत्यादिश्रुतिस्मृतिसूत्रादिप्रमाणैः भेदं प्रसाध्य तस्य धर्मिस्वरूपत्वमपि व्यवास्थापि ।

अस्य भेदविद्याविलासग्रन्थस्य कर्तारः श्रीविजयीन्द्रतीर्थश्रीमच्चरणाः श्रीराघवेन्द्रस्वामिपादानामाश्रमगुरूणां श्रीसुधीन्द्रतीर्थश्रीपादानां विद्यागुरव आश्रमगुरवश्चासन् । इमे श्रीविजयीन्द्रतीर्था आसेतुहिमाचलं सुक्षेत्राणि चरित्वा चतुरधिकशतग्रन्थान् निर्मायान्ते कुम्भकोण-

क्षेत्रमासादयामासुः । तत्र वेदान्तग्रन्थपाठप्रवचनप्रचारणादिना स्वाश्रमोचितधर्म्यकर्माचरणादिना महान्तं कालं यापयित्वा तत्क्षेत्रं पावयामासुः ।

**प्रकृतप्रकाशनं प्रति**

पूर्णप्रज्ञसंशोधनमन्दिरस्य निदेशकैः डा. ए.वि. नागसम्पिगेमहाभागैः सार्धवर्षात्पूर्वमेतद्ग्रन्थसम्पादनायाहं नियोजितः एतद्ग्रन्थसम्पादनकर्मणि प्रावर्तिषि । ग्रन्थोऽयं १९८५तमे क्रिस्तीये वर्षे नञ्जनगूडु-परिमळग्रन्थप्रकाशनमन्दिरद्वारा मुद्रापितपूर्वः । तत्र ग्रन्थाध्ययनाव-रोधकानि बहूनि क्लेशस्थानान्यासन् । तानि न्यूनीकर्तुमत्र प्रयत्नो विहितः । ग्रन्थे उदाहृतप्रमाणानामाकरान्वेषणमत्र यावच्छक्ति विहितम् । ग्रन्थे प्रतिपादितानां विषयाणां तत्तत्स्थाने शीर्षिकाऽपि प्रदत्ता । यत्र क्वचित् पाठस्य साधुता सम्पादिता सा तत्तत्स्थले एव सूचिता । प्रयत्नमिमं सज्जना स्वाशीर्भिः स्वीकुर्वन्त्विति प्रार्थयतेऽयं गुरुचरणसरोजद्वन्द्वरजोरागी जनः ।

प्रथमतः द्वादशवर्षाणि यावत् सुधान्तवेदान्तग्रन्थान् पाठयित्वा मां शुकवत् शिक्षितवद्भ्यः मम गुरुभ्यः, ऐतिहासिकपञ्चमपर्याय-पीठमधिष्ठितवद्भ्यः **यतिकुलचक्रवर्तिभ्यः** अनन्तश्रीविभूषितेभ्यः परमपूज्येभ्यः **श्रीश्रीविश्वेशतीर्थश्रीमच्चरणेभ्यः** सभक्तिसाष्टाङ्गप्रणामान् समर्पयामि ।

एतद्ग्रन्थसम्पादने मां नियोज्य कालेकाले मार्गदर्शनं कृतवद्भ्यः

पूर्णप्रज्ञसंशोधनमन्दिरस्य निदेशकेभ्यः शास्त्रनदीष्णेभ्यः **डा. ए.वि. नागसम्पिगेमहाभागेभ्यः** हार्दिककृतज्ञताकुसुमानि निवेदयामि । यैः एतद्ग्रन्थप्रकाशनार्थं बाह्यवित्तमानायि । ग्रन्थश्चायं प्राकाश्यतां नीतश्च । तेभ्यः डा. ए.वि. नागसम्पिगेमहाभागेभ्यः धन्यवादान् निवेदयामि । तथा मम सुहृद्वर्येभ्यः, उपनिदेशकेभ्यः डा. रङ्गनाथकट्टि-महाभागेभ्योऽन्येभ्य पण्डितमन्मित्रेभ्यश्च धन्यवादान् समर्प्य विरमामि ।

इति सुधीजनविधेयः

**डा. शङ्करनारायण अडिगः**

# विषयानुक्रमणिका

| क्र.सं. | विषया | पृ.सं. |
|---|---|---|

## प्रत्यक्षपरिच्छेदः


| | | |
|---|---|---|
| १. | मङ्गलाचरणम् | १ |
| २. | जीवेशभेदे प्रत्यक्षप्रमाणनिरूपणम् | २ |
| ३. | मनसः करणत्वाभावशङ्का, भेदे मनःप्रामाण्याभावशङ्का | ३ |
| ४. | मनसः प्रामाण्योपपादनम् | ५ |
| ५. | मनस इन्द्रियत्वोपपादनम् | ५ |
| ६. | मनसो भेदेन सह सन्निकर्षाभावापादनम् | ८ |
| ७. | मनसो भेदेन सह सन्निकर्षोपपादनम् | ९ |
| ८. | सुखादिसाक्षात्कारस्य साक्षिरूपत्वप्रतिपादनम् | १० |
| ९. | स्मृतिप्रामाण्यसमर्थनम् | ११ |
| १०. | योग्यानुपलब्धिदुर्वचत्वशङ्का | १२ |
| ११. | योग्यानुपलब्धिनिर्वचनम् | १४ |
| १२. | सहकार्यभावेन जीवपरमात्मभेदानुपलम्भशङ्का | १७ |
| १३. | जीवस्य परिच्छिन्नत्वनिरासशङ्का | १९ |
| १४. | जीवपरमात्मभेदानुपलम्भशङ्कानिरासः | २० |
| १५. | योग्यानुपलब्धेरिन्द्रियसहकारित्वाभावोपपादनम् | २२ |
| १६. | जीवाणुत्वसमर्थनम् | २४ |
| १७. | जीवब्रह्मभेदस्यौपाधिकत्वशङ्का | २५ |
| १८. | जीवब्रह्मभेदस्य स्वाभाविकत्वोपपादनम् | २६ |
| १९. | जीवब्रह्मभेदस्यौपाधिकत्वनिरासः | २७ |
| २०. | जीवपरमात्मभेदे 'नाहमीश्वरः' इति प्रत्यक्षप्रमाणप्रदर्शनम् | ३२ |

| क्र.सं. | विषया | पृ.सं. |
|---|---|---|

## अनुमानपरिच्छेदः


२१. जीवब्रह्मभेदेऽनुमानप्रमाणप्रदर्शनम् ३५
२२. जीवेश्वरभेदसाधकानुमाने दोषनिरासः ३५
२३. जीवपरभेदेऽर्थापत्तिप्रमाणोदाहरणम् ३७
२४. जीवानां परस्परभेदेऽनुमानप्रमाणप्रदर्शनम् ३८
२५. औपाधिकभेदे व्यवस्थाऽनुपपत्तिसाधनम् ४०
२६. जीवपरभेदसाधकहेतूनां बाधकोद्धारः ४०
२७. जीवानां निरुपाधिकभेदाभावसाधकानुमाननिरासः ४१


## श्रुतिपरिच्छेदः


२८. प्रत्यक्षसिद्धे भेदे श्रुतितात्पर्याभावशङ्का ४४
२९. श्रुतेर्भेदानुवादकत्वेन तत्र तस्यास्तात्पर्योपपादनम् ४५
३०. भेदज्ञानेनानवद्यपुमर्थाभावेन प्रत्युतानर्थहेतुत्वेन च न तत्र श्रुतितात्पर्यमिति शङ्का ४७
३१. भेदज्ञानस्य पुमर्थसाधनत्वसमर्थनम् ४७
३२. 'उदरमन्तरं कुरुते' इत्यादिश्रुतेः मिथ्याभूतभेददर्शनपरत्वेन भेदस्यानिन्दितत्वोपपादनम् ४९
३३. नान्योऽतोऽस्ति द्रष्टृ' 'नान्यदतोऽस्ति द्रष्टृ' इत्यनयोः श्रुत्योः भेदप्रतिषेधकत्वनिराकरणम् ५०
३३. 'द्वा सुपर्णा' इत्यादिश्रुतेः जीवेशभेदे तात्पर्याभावशङ्का ५२
३४. 'द्वा सुपर्णा' इत्यादिश्रुतिः जीवेशभेदप्रतिपादकत्वे उपक्रमादिविरोधपरिहारः ५३

| क्र.सं. | विषया | पृ.सं. |
|---|---|---|


३५. 'द्वा सपर्णा' इत्यादिश्रुतेर्भेदपरत्वे पैङ्गिरहस्यब्राह्मणविरोधपरिहारः' ५५

३६. 'सोऽश्नुते' इत्यादिश्रुत्या पारमार्थिकजीवेशभेदोपपादनम् ५७

३७. 'परात्परं पुरिशयं पुरुषमीक्षते' 'यदा पश्यः' इति श्रुत्योः जीवेशभेदप्रतिपादकत्वोपपादनम् ५९

३८. अभेदश्रुतीनामभेदपरत्वे बाधकसद्भावेन भेदपरत्वावश्यकता ६०


**भेदस्वरूपसमर्थनं नाम चतुर्थः परिच्छेदः**


३९. भेदस्वरूपस्य दुर्वचत्वशङ्कापूर्वकं तन्निरासः ६३

४०. भेदस्य मायिकत्वशङ्का तन्निरासश्च ६५

४१. भेदस्यान्योन्याभावरूपत्वमपि साधु ६७

४२. भेदस्य प्रतियोगिसामानाधिकरण्याङ्गीकारे बाधकशङ्का, तत्र परिहारद्वयम् ६८

४३. घटत्वात्यन्ताभाव एव भेद इति मतान्तरनिराकरणम् ६९

४४. 'भूतलं घटो न' इति प्रतीतेरन्योन्याभावविषयकत्वोपपादनम् ७३

४५. अन्योन्याभावत्वस्य अखण्डोपाधित्वसमर्थनम् ७५

४६. इदमिदं नेति प्रतीतेरन्योन्याभावत्वविषयकत्वसमर्थनम् ७८

४७. अतिरिक्तान्योन्योन्याभावाङ्गीकारे बाधकोपपादनम् ७९

४८. अत्यन्ताभावान्योन्याभावयोर्विरुद्धधर्मवत्त्वेन भेदसाधनम् ८१

४९. अन्योन्याभावस्वरूपनिर्वचनम् ८२

५०. आरोपवैचित्र्यादभावधीवैचित्र्यशङ्कानिरासः ८५

५१. भेदाङ्गीकारपक्षेऽनवस्थाशङ्का तत्परिहारश्च ८७

| क्र.सं. | विषया | पृ.सं. |
|---|---|---|
| ५२. | भेदधर्म्यादीनां दुर्निरूपत्वशङ्कानिरासः | ९१ |
| ५३. | भेदपक्षे सम्बन्धादीनां प्रतिपादनम् | ९३ |
| ५४. | भेदज्ञानेऽन्योन्याश्रयपरिहारः | ९३ |
| ५५. | भेदज्ञानेऽनवस्थाशङ्कापरिहारः | ९७ |
| ५६. | भेदस्य धर्मिस्वरूपतानिरूपणम् | ९९ |
| ५६. | भेदप्रतीतिव्यवहारविषयोपपादनम् | १०० |
| ५७. | उपसंहारः | १०३ |
| ५८. | एतद्ग्रन्थोदाहृतप्रमाणवचनसङ्ग्रहः | १०५ |

* * *

श्रीः

॥ श्रीमद्रामचन्द्रो विजयतेतराम् ॥

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मक-
श्रीलक्ष्मीहयग्रीवाय नमः ॥

श्रीमद्विजयीन्द्रतीर्थश्रीपादविरचितः

# भेदविद्याविलासः

॥ प्रत्यक्षपरिच्छेदः ॥

(मङ्गलाचरणम्)

उच्चैरारुह्य नीचैः पतति निजजनद्रोहकृत्सत्यमित्थं
वस्तु व्याहर्तुकामः किल दनुजकुलं पाणिजप्रोतमभ्रे ।
उत्क्षिप्याधः क्षिपन्मे पदभजनपरं रक्षितैवं सदेति
प्रह्लादे दत्तदृष्टिर्नतजनमजहन् पौरुषः पातु सिंहः ॥ १ ॥

कल्याणगुणपूर्णाय वल्लभाय श्रियः सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ २ ॥

सर्वज्ञं सर्वकर्तारं सर्वजीवजडात्मकात् ।
प्रपञ्चाद् वस्तुतोऽत्यन्तभिन्नं श्रीनृहरिं भजे ॥ ३ ॥

तं पाणिपल्लवं बाहुशाखं सद्द्विजशोभितम्[1] ।
विद्याहासलतापुष्पं मध्वकल्प[2]द्रुमं भजे ॥ ४ ॥

मध्वशास्त्रमहाचापमनुद्धार्यमपीतरैः ।
उद्धृत्य कीर्तिं यो लेभे तं जयार्यं सदा भजे ॥ ५ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ६ ॥

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालिसेविते ॥ ७ ॥

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
भेदविद्याविलासोऽयं तन्यते तत्त्वविन्मुदे ॥ ८ ॥

*जीवेशभेदे प्रत्यक्षप्रमाणनिरूपणम्*

नन्वेतदयुक्तम् । परमेश्वरात्मनो नृहरेर्जीवजडात्मकप्रपञ्चाद् वास्तवभेदे मानाभावात् । प्रत्युत, जडातिरिक्तोऽहमिति प्रतीयमानोऽर्थो न परस्माद् भिद्यते चेतनत्वात्, '**तत्त्वमसि**'[3] इति वाक्यस्थ-पदार्थत्वाद्वा ब्रह्मवदित्यनुमानेन जीवपरयोरभेदस्यैव सिद्धेः । विपक्षे भेदग्राहकप्रमाणाभावात्, अभेदश्रुत्यप्रामाण्यप्रसङ्गाच्च नाप्रयोजकत्व-मिति चेन्न । प्रमाणाभावस्यासिद्धेः, 'नाहमीश्वरः' इत्यादिप्रत्यक्षस्यैव सत्त्वात् । न च तत्प्रत्यक्षं भ्रमः, बाधकाभावात् । 'अहमीश्वरः सर्वज्ञः'

---

१. -सेवितम् - पा.
२. तरुम् - पा.
३. छा.उ. ६.८.७

इत्यप्रतीतेः । न च, न तावदिदं प्रत्यक्षं चक्षुरादिजन्यम्, आत्मनि तदसम्भवात् । मनसश्च प्रमाणान्तरसहकारिणः [१]प्रमाणत्वायोगात् । अतः क्लृप्तकारणाभावात् सा भ्रान्तिरिति वाच्यम् । सुखाद्युपलब्धेः प्रमाणान्तराजन्यतया मनस एव प्रमाणत्वे भेदस्यापि तत्प्रमाणकत्वात् । न चातीन्द्रियेश्वरभेदः कथं प्रत्यक्षः ? प्रत्यक्षप्रतियोगिकाभावस्यैव प्रत्यक्षत्वादिति वाच्यम् । अभावप्रत्यक्षे तु प्रतियोगिप्रत्यक्षस्या-तन्त्रत्वात् । मनसि घटत्वाद्यभावस्याप्रत्यक्षत्वात् । घटे मनस्त्वाद्यभावस्य प्रत्यक्षत्वाच्च ।

किञ्च, यत्र हि यत्सत्त्वमुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः । तथा च जीवेतरभेदवदीश्वराभेदोऽपि अस्ति चेत् प्रत्यक्षः स्यादिति तदनुपलब्ध्या भेदः प्रत्यक्षः । न चायमौपाधिक एव, शरीरादि-विशिष्टस्यैवेश्वरभेदानुभवादिति न भेदधीः प्रत्यक्षा स्यादिति वाच्यम् । अहमिति प्रतीतेः शुद्धात्मविषयत्वेन तत्प्रत्याय्यभेदस्याप्य-नौपाधिकत्वादिति ।

*मनसः करणत्वाभावशङ्का, भेदे मनःप्रामाण्याभावशङ्का*

**अत्र केचित्—** 'न तावज्जीवेश्वरभेदे मनः प्रमाणम् । प्रमाणसहकारित्वादालोकादिवत् । प्रमाणस्य च चक्षुरादेः प्रमाणान्तर-सहकारित्वादर्शनात् । चक्षुषः प्रमाणान्तरसहकारित्वे तत्राचाक्षुषत्व-प्रसङ्गरूपबाधकस्येव चाक्षुषादिज्ञानेऽपि मनःप्रयोज्यजाति-

१. पृथक्प्रमाणत्वा - पा.

विशेषप्रसङ्गरूपबाधकस्य तुल्यत्वात् । न च मनसः प्रमाणत्वानुरोधेन चाक्षुषादिज्ञानेऽपि मनःप्रयोज्यजातिविशेषप्रसङ्ग इष्ट इति वाच्यम् । चक्षुरादिजन्यज्ञाने मानसत्वस्य जातिविशेषस्यानुभवपराहतत्वात् । मनःप्रमाणाभावस्याबाधितानुमानेन निश्चितत्वाच्च । मनसः सर्वज्ञानकारणत्वेन तदेव सर्वत्र प्रमाणम्, चक्षुरादि[1] त्वालोकादिवत् सहकारिमात्रमित्येककारणतापत्तिः ।

ननु सुखादिप्रत्यक्षे परिशेषान्मन एव करणम् । एवं मनसेदं पश्यामीत्यनुभवाद्व्यासङ्गानुपपत्तेश्च, बहिरपि मनः करणमिति चेन्न । 'सुखादिव्यवहारः स्वविषयकज्ञानजन्यः व्यवहारत्वात्' इत्यनुमानाल्लाघवाच्च तदेकं सिद्ध्यति । न च [2]सुखादिप्रत्यक्षस्योत्पाद-विनाशानुभवविरोधः । [3]सुखादौ सति पृथक्तदुत्पत्तिविनाशानुभव-योरभावेन [4]सुखज्ञानं नष्टमित्याद्यनुभवस्य विषयनाशादिमात्रविषयत्वात् । न च विनिगमकाभावः, सुखाद्यनुभवदशायां दुःखाद्ययोगान्मानाभावाच्च । बुद्ध्यादिगोचरनित्यसाक्षात्कारस्यैकस्यानभ्युपगमे बुद्ध्यादेर्नियमेन मनसा ग्रहासम्भवेन तद्दशायां 'मयेदमनुभूयते वा न वा', 'इदानीमिदमिच्छामि न वा' इत्यादिसन्देहः स्यात् । ग्राह्यनिश्चय-व्यतिरिक्तसंशयसामग्रीसत्त्वात् । ततश्चावस्थात्रयानुयायिदुःखादि-साक्षात्कारस्य नित्यत्वान्न तत्र मनः करणम् । 'मंनसेदं पश्यामि' इत्यनुभवोऽपि 'तदावयोर्मनो जानाति' इत्यनुभवेन **'कामः सङ्कल्पः'**[5]

---

१. 'चक्षुरादित्वालोकादिवत्' इति मु.पाठः । २. दुःखादि - पा.
३. दुःखादौ - पा.
४. दुःख - पा. ५. बृ.उ. १.५.३

इत्यादिश्रुत्या च दर्शनाद्युपादानस्य मनस आत्मनि दर्शनाद्यारोप-निमित्तत्वान्न विरुध्यते । व्यासङ्गस्त्वात्मनि परस्य क्रमिकज्ञान-जनकशक्त्याऽन्यथोपपद्यत इति न तेनापि मनः करणं सिध्यति ।

किञ्च, प्रमाश्रयत्वादपि न मनसः तत्र करणत्वम् । अहं जानामीति ज्ञानाश्रयतया प्रतीयमानस्याहमर्थस्यान्तःकरणरूपत्वस्य वक्ष्यमाण-त्वात् । अतो भेदे न मनः प्रमाणमिति ।।

*मनसः प्रामाण्योपपादनम्*

अत्र ब्रूमः — न तावत् प्रमाणसहकारित्वेन मनसोऽप्रामाण्यम् । रूपादिसाक्षात्कारे जनयितव्ये चक्षुस्सहकारिणोऽप्यालोकविशेषस्य धूमवद् वह्न्यनुमानत्वदर्शनेन व्यभिचारात् । बाधसत्प्रतिपक्षस्थले लिङ्गपरामर्शस्य [१]मानसतोऽपि स्वसमानविषयकप्रत्यक्षरूपपरामर्शान्तरे जनयितव्ये विशेषणज्ञानत्वेन विशेषणतावच्छेदकप्रकारकविशेषण-ज्ञानत्वेन वा प्रत्यक्षसहकारित्वोपलम्भाच्च । न च येन रूपेण प्रमाणान्तरत्वं यस्य तस्य न तेन रूपेण प्रमाणान्तरसहकारित्वम्, आलोकादेस्तु वह्निव्याप्यत्वादिरूपेण प्रमाणान्तरस्य न तेन रूपेण प्रमाणान्तरसहकारित्वमिति वाच्यम् । इन्द्रियत्वेन प्रमाकरणस्यापि मनसो न तेन रूपेण प्रमाणान्तरसहकारित्वं, किं तु मनस्त्वेनेति तस्याप्यालोकादिवत्प्रमाणत्वोपपत्तेः ।

*मनस इन्द्रियत्वोपपादनम्*

न च मनस इन्द्रियत्वे प्रमाणाभावः । **'इन्द्रियाणां मनश्चास्मि'**[२],

१. अनुमानतोऽपि- पा.

२. भ.गी.१०.२२

**'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः'**[१] ।। इति भगवद्वचनेन, **'कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम्'**[२] इति कोशकारप्रसिद्ध्या च तत्सिद्धेः । ज्ञानमात्रं प्रति मनस्त्वेन, अपरोक्षज्ञानं प्रतीन्द्रियत्वेन, सुखादिसाक्षात्कारं प्रति प्रमाणान्तरासहकृतमनस्त्वेन च जनकत्वाभ्युपगमात्, अनुमित्यादावपरोक्षत्वस्य रूपादिसाक्षात्कारे मानसत्वस्य वा प्रसङ्गः । न चेन्द्रियत्वेन मनसो जनकत्वे मानाभावः । सुखादिज्ञाने साक्षात्कारत्वानुपपत्तेरेव मानत्वात् ।

न च सुखादिसाक्षात्कारस्य साक्षिरूपतया न मनोजन्यत्वमिति वाच्यम् । उत्पादविनाशानुभवेन तस्य मनोजन्यत्वसिद्धेः । न च तदनुभवस्य दुःखा[३]द्युत्पादनाशविषयत्वमुक्तमिति वाच्यम् । ज्ञानोत्पादादिविषयत्वे बाधकाभावात् । न च साक्षिणैव सुखादिव्यवहारसिद्धेः तद्विषयकमानसज्ञानकल्पने गौरवमिति वाच्यम् । सुखादिरूपविषयतत्सन्निकृष्टमनोरूपसामग्रीसत्त्वेन तस्याप्युत्पत्तौ बाधकाभावात् । न च मनसः सर्वज्ञानकरणत्वेन चक्षुरादेश्चाऽऽलोकादिवत्सहकारिमात्रत्वापत्त्या एककारणतापत्तिः । एकस्य करणस्य एकजातीयकार्यं प्रति विजातीयसहकार्यपेक्षाया अदर्शनेन चक्षुरादेः सहकारित्वमात्रकल्पनानौचित्यात् । रूपादिज्ञाने चाक्षुषत्वादिवैजात्यानुपपत्तेश्च । न च [४]सहकारिवैचित्र्यादेव कार्यवैचित्र्योपपत्तिः ।

---

१. भ.गी.१३.६ २. अ.को. १.५.८

३. सुखा -पा. ४. सहकार्यवैचित्र्यादेव -इति मुद्रितपाठः ।

रूपादिज्ञानसहकारिणां परस्परं विचित्रत्वेनैकत्रापि बहुवैचित्र्योपलम्भ-प्रसङ्गात् ।

किं च मनसेदं पश्यामीत्याद्यनुभवेन मनसः प्रमाकरणत्वं दुर्वारम् । न च तदावयोर्मनो जानातीत्यनुभवेन **'कामस्सङ्कल्पः'**[1] इत्यादिश्रुत्या च दर्शनाद्युपादानस्य मनस आत्मनि दर्शनाद्यारोपनिमित्तत्वे-नाप्युक्तानुभव उपपद्यत इति वाच्यम् । मनो जानातीत्यनुभवस्यैव गौणत्वेन उक्तानुभव[2]गौणत्वाकल्पकत्वात् । न च विनिगमकाभावः । फलानुसारेण मनःकरणकत्वस्योक्तत्वात् । 'कामः सङ्कल्पः' इत्यादेरपि 'लाङ्गलं जीवनम्' इत्यादिवदुपपत्त्योपादानोपादेयभावाकल्पकत्वात् । अमुख्यार्थाश्रयणस्य उभयत्राविशेषात् ।

किञ्च व्यासङ्गानुपपत्त्याऽपि मनसः प्रमाणत्वं दुर्वारम् । न चाऽत्मनि क्रमिकज्ञानजननशक्त्यैव व्यासङ्गोपपत्तिरिति वाच्यम् । दृष्टकारण-व्यतिरेकादेव इन्द्रियान्तराद् ज्ञानानुपपत्तिसम्भवेऽक्लृप्तक्रमिकज्ञान-जननशक्तिकल्पनायां प्रमाणाभावात् । न च क्रमिकज्ञानजननशक्त्यभावे समनस्केन्द्रियादेव युगपदनेकज्ञानोत्पत्तिप्रसङ्ग इति वाच्यम् । एकस्य ज्ञानकरणस्यैकदा एकज्ञानजनकत्वमिति करणस्वाभाव्यादेव तदनुत्पत्तिसम्भवात् । न च मनसो ज्ञानाद्याश्रयत्वेन करणत्वानुपपत्तिः, ज्ञानकरणस्य चक्षुरादेराश्रयत्वग्राहकप्रमाणाभावेन तस्यातथात्वेऽपि इहोभयग्राहकप्रमाणसत्त्वेन ज्ञानाश्रयस्यापि मनसः तत्करणत्वोपपत्तेः । अहं जानामीत्यात्मन एव ज्ञानाश्रयत्वानुभवाच्च । निरसिष्यते चाहमर्थस्यानात्मत्वम् ।

---

१. बृ.उ.१.५.३ २. गौणत्वकल्पकत्वायोगात् -पा.

*मनसो भेदेन सह सन्निकर्षाभावापादनम्*

यदपि, किञ्च न भेदे मनः प्रमाणम्, तदसन्निकृष्टत्वात् सम्मतवत् । न चासिद्धिः । मनसो भेदेन संयोगसमवायतादात्म्यानामन्यतमो नेति सुप्रसिद्धत्वात् । न चान्य इन्द्रियसन्निकर्षोऽस्ति । न चासन्निकृष्टमिन्द्रियमर्थं गृह्णाति, विशेषणविशेष्येन्द्रियसन्निकर्षस्य जन्यप्रत्यक्षमात्रहेतुत्वात् । न च भेदस्य विशेषणतासन्निकर्ष इति वाच्यम् । व्यवहितप्रदेशेऽप्यभावग्रहणप्रसङ्गात् । न चाधिकरणेन्द्रिय-सन्निकर्षोऽपि कारणमिति वाच्यम् । परमते शब्दाभावस्या-प्रत्यक्षत्वप्रसङ्गात् । न च यत्र प्रतियोगिनः सत्त्वमनुपलब्धिविरुद्धं तद्विशेषणताऽभावस्य इन्द्रियप्रत्यासत्तिरिति वाच्यम् । कदाचि-दुपलम्भस्य व्यवहितदेशस्थघटादेरपि सत्त्वात् । नियमेनोपलम्भस्य च शब्दादेरप्यभावाद् विशेषणताया इन्द्रियप्रत्यासत्तित्वे मानाभावाच्च । अनुपलब्धिमात्रादप्यभावज्ञानोपपत्तेः । ज्ञानाकरणकस्यापि ज्ञानस्य मनःकरणकानुमितिवदप्रत्यक्षत्वसम्भवाच्च । क्वचिदिन्द्रिय-व्यापारस्याधिकरणग्रह एवोपक्षीणत्वात् ।

न च मानान्तरकल्पनागौरवम् । त्वयाऽपि तस्या अभावज्ञाने निमित्तताया अभ्युपेतत्वात् । विशेषणतया इन्द्रियप्रत्यासत्तित्व-ज्ञानकरणत्वयोः कल्प्यत्वात् । न च समवायप्रतीतौ तत् क्लृप्तमिति वाच्यम् । तदसम्प्रतिपत्तेः । तादात्म्ये च न प्रत्यासत्त्यन्तरमपेक्ष्यते । तस्य साक्षिभास्यत्वात् । निरवयवात्मनि संयोगासम्भवाच्च, न भेदस्य इन्द्रियसन्निकृष्टत्वम् । एकत्र संयोगतदभावायोगात् । वृक्षादावप्यौपाधिकभेदवत्येव तदुभयप्रतीतेः । 'अग्रे वृक्षः

कपिसंयोगवान् मूले न' इत्यनुभवात् । न च परमते तदभिन्ने तद्भेदः सम्भवति । सिद्धान्ते च कल्पितप्रदेशवृत्तिसंयोगस्य प्रमाहेतुत्वं न सम्भवति । न चैकस्मिन्नवच्छेदकभेदादेव भावाभाववृत्तिरिति वाच्यम् । अधिकरणभेदाभावे तदभाववदवृत्तित्वघटितावच्छेदकत्वस्याग्रत्वादेरयोगात् । तदधिकरणवृत्तित्वस्य प्रमेयत्वादिसाधारण्यात् । संयोगस्य व्याप्यवृत्तित्वमनुभवपराहतम्, असम्भवि च, अतथात्वे शब्दादेः सर्वत्र प्रतीतिप्रसङ्गात् । तस्मान्न मनसो भेदेन सम्बन्धः सम्भवतीति ॥

*मनसो भेदेन सह सन्निकर्षोपपादनम्*

तदपि न । इन्द्रियसम्बद्धविशेषणताया एवाभावेनेन्द्रियप्रत्यासत्तित्वात् । न च शब्दाभावस्याप्रत्यक्षत्वप्रसङ्गः । तत्रेन्द्रियविशेषणताया एव तथात्वोपगमात् । न चैवमननुगमः । संयोगसमवाययोरिवाननुगतस्यापि प्रत्यासत्तित्वसम्भवात् । इन्द्रियप्रत्यासत्तित्वेनानुगमस्योभयत्र तुल्यत्वात् । न चैवं चक्षुर्निष्ठघटाद्यभावस्यापि तेनैव ग्रहणप्रसङ्गः । फलबलेन तस्याः क्वचिदेव प्रत्यासत्तित्वाभ्युपगमात् । न च तथापि मनसो भेदेन नेन्द्रियसम्बद्धत्वविशेषणताप्रत्यासत्तिः । निरवयवस्याऽत्मनो मनसाऽव्याप्यवृत्तिसंयोगासम्भवादिति वाच्यम् । आत्मनो निरवयवत्वेऽपि स्वावच्छेदेनैव मनस्संयोगवृत्तौ बाधकाभावात् । न चासम्बन्धस्यावच्छेदकत्वायोगात् सम्बद्धस्यैवावच्छेदकत्वं वाच्यम् । स च सम्बन्धोऽप्यव्याप्यवृत्तिरेवेत्युक्तदोषतादवस्थ्यमिति वाच्यम् । स्वसंयोगावच्छेदेन स्ववृत्तिसम्भवेन तदवच्छेदकत्वाविरोधात् । अन्यथा संयोगस्यौपाधिकभेदवत् प्रदेशवृत्तित्वमङ्गीकुर्वतोऽप्येतद्दोषसाम्यात् ।

तत्रापि सम्बद्धस्यौपाधित्वमसम्बद्धस्य वेति विकल्पदूषणयोः सम्भवात् । न च तथाऽपि कथं शाखादेस्संयोगाद्यच्छेदकत्वम्, तदभाववदवृत्तित्वगर्भस्य तस्य शाखादावभावादिति वाच्यम् । अवच्छेदकत्वस्य फलबलेन स्वरूपसम्बन्धरूपत्वविशेषत्वकल्पनात् ।

न च तथापि विशेषणतायाः प्रत्यासत्तित्वे मानाभावः । अभावस्यैन्द्रियकत्वे सिद्धेऽनतिप्रसङ्गायान्यस्यासम्भवेन विशेषणताया एव प्रत्यासत्तित्वकल्पनात् । न चानुपलब्धिमात्रादभावप्रतीत्युपपत्तेरैन्द्रियकत्वमसिद्धमिति वाच्यम् । अनुपलब्धेः प्रमाणान्तरत्वकल्पने गौरवात् । न चेन्द्रियसहकारित्वेन क्लृप्तायामनुपलब्धौ करणत्वमात्रकल्पने लाघवम्, विशेषणतायाः प्रत्यासत्तित्वज्ञानजनकत्वयोः कल्पने गौरवमिति वाच्यम् । अनुपलब्धेः करणत्वस्याभावज्ञाने तत्प्रयोज्यजातिविशेषस्य च कल्प्यत्वेन तुल्यत्वात् । विशेषणतायाः प्रत्यासत्तित्वकल्पनेनैवानतिप्रसङ्गसिद्धेः, तस्य ज्ञानजनकत्वाकल्पनाच्च । चक्षुषा घटाभावं पश्यामीत्याद्यनुभवेन घटाभावज्ञानस्य प्रत्यक्षत्वाद्यनुभवेनानुपलब्धित्वकल्पनायोगाच्च । यदपि, नापि मनसः सहकारी योग्यानुपलम्भोऽस्तीत्यादिना योग्यानुपलब्धिस्वरूपखण्डनं तत् स्वव्याहतत्वादुपेक्षणीयम् । अनुपलब्धिप्रामाण्यवादिनाऽपि तत्स्वरूपस्यावश्यं निर्वक्तव्यत्वात् तस्या एव मनस्सहकारित्वोपपत्तेश्च ।

*सुखादिसाक्षात्कारस्य साक्षिरूपत्वप्रतिपादनम्*

वस्तुतस्तु सुखादिसाक्षात्कारो न मानसः । किं तु साक्षिरूप एव । सुखादिव्यवहारस्याऽवश्यकसाक्षिणैवोपपत्त्या तत्कल्पकाभावात् ।

